## मदीयः –

मम अयं 'मदीयः' इत्यत्र "युष्मदस्मदोरन्यतरस्यां खञ्च" इति सूत्रेण चाच्छे सुपो लुकि छस्य ईयादेशे "प्रत्ययोत्तरपदयोश्च" इत्यनेन अस्मदोर्मपर्यन्तस्य मादेशे 'म अद् ईय' इति जाते "अतो गुणे" इति पररूपे विभक्तिकार्ये च कृते 'मदीयः' इति ।

## म्रदिमा—

मृदोर्भावः म्रदिमेत्यत्र "पृथ्वादिभ्य इमनिज्वा" इति इमनिच्प्रत्यये इकारचकारयोर्लोपे 'मृदु इमन्' इति जाते "र ऋतो हलादेर्लघोः" इति ऋकारस्थाने रकारे 'यचि भम्" इति भसंज्ञायां "टेः" इति दकारोत्तरवर्त्ति-उकारस्य लोपे 'म्रदिन्' इति जाते प्रादिपदिकत्वात् सौ "सर्वनामस्थाने चासम्बुद्धौ" इति उपधादीर्घे हल्ङ्यादिलोपे नलोपे 'म्रदिमा' इति जातम् ।

## सर्विका—

सर्वनाम्नः सर्वशब्दात् अकच्प्रत्यये 'सर्वक' इत्यस्मात्स्त्रीत्वविवक्षायाम् 'अजाद्यतष्टाप्' इति टापि 'सर्वका' इति जाते 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप" इति सूत्रेण वकाराकारस्य इत्वे आबन्तत्वात् स्वाद्युत्पत्तौ सुलोपे 'सर्विका' इति सिद्धम्

## पचन्ती—

पच्-धातोः शतृप्रत्यये 'पचत्' इति स्त्रीत्वविवक्षायाम् 'उगितश्च' इति ङीपि ङपावितौ लुप्तौ च 'आच्छीनद्योर्नुम्' इति नुमि सौ 'हल्ङ्याब्भि'ति सुलोपे 'पचन्ती' इति ।

## यादृशी—

त्यदादिषु दृशोऽनालोचने कञ् च' इति कञ्प्रत्यये 'यादृश' इति, ततः स्त्रीत्वे 'टिड्ढाणञि'त्यादिना ङीपि 'यस्येति च' इत्यनेन भस्याऽकारस्य लोपे विभक्त्यादिकार्ये 'यादृशी' इति ।

## कुमारी—

बाल्यवाचकात् कुमारशब्दात् स्त्रीत्वविवक्षायां 'वयसि प्रथमे' इति ङीपि 'ङ्याप्प्रातिपदिके'ति स्वाद्युत्पत्तौ हल्ङ्याब्भिति तस्य लोपे 'कुमारीति ।

## वामोरूः—

वामौ उरू यस्याः, इति विग्रहे वामोरुशब्दात् स्त्रीत्वविवक्षायां 'संहितशफलक्षणवामादेश्च' इति ऊङ्प्रत्यये सवर्णदीर्घे विभक्तिकार्ये 'वामोरूः' इति रूपम् । अत्र प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्, इति स्वाद्युत्पत्तिर्बोध्या ।

इति श्रीरामचन्द्रझाकृतप्रश्नोत्तरलेखनप्रकारः समाप्तः ।